धर्माय स्वाहा धर्मः पित्रे ॥ ॐ यमाय नमः ॥

नैर्ऋत्ये निर्ऋतिमाबाहेत्- ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ ॐ निर्ऋतये नमः ॥ इति ॥

पश्चिमे वरुणमावाहेत्- ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश ँ समा न आयुः प्रमोषीः ॥ ॐ वरुणाय नमः ॥

वायव्यां वायुमावाहेत्- ॐ आनो नियुद्भिः शतिनीभिरध्वर ँ सहस्त्रिणीभिरूप याहि यज्ञम्। वायो अस्मिन्त्सवने मादयस्व यूयंपात स्वस्तिभिः सदा नः ॥ ॐ वायवे नमः ॥

उत्तरे सोममावाहेत्- ॐ वय ँ सोमव्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि॥ ॐ सोमाय नमः ॥

ईशाने ईश्वरमाव्हेत्- ॐ नमस्ते रुद्रमन्यव उतोत इषवे नमः बाहुभ्याममुतते नमः ॥ ॐ ईश्वराय नमः ॥

ईशानपूर्वयोर्मध्ये ब्रह्मणमावाहेत्- ॐ ब्रह्मयज्ञानं प्रथमं पुस्तात् द्विसीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः। ॐ ब्रह्मणे नमः ॥

निर्ऋतिपश्चिमयोर्मध्ये अनन्तमावाहेत्- ॐ स्योना पृथिवी नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः ॥ ॐ अनन्ताय नमः ॥

॥ इति दशदिक्पाल पूजनम् ॥

## सर्वदेव षोडशोपचार पूजनमन्त्राः

आवाहनम्- ॐ देवेश भक्तिसुलभे सर्वा वरण संयुक्तम्।
यावत् त्वां पूजयिष्यामि तावत् त्वं सुस्थिरो भव॥

आसनम्- ॐ कार्तस्वरमयं दिव्यं नानागुण समन्वितम्।
अनेक शक्ति संयुक्तमासनं प्रतिगृह्यताम्॥

पाद्यम्- ॐ यद् भक्तिलेश सम्पर्कात् परमानन्द सम्भवः।
तस्मैते चरणाब्जाय पाद्यं मे प्रतिगृह्यताम्॥

अर्घ्यम्- ॐ तापत्रयहरं दिव्यं परमानन्दलक्षणम्।
तापत्रय विर्निमुक्त्यै तवार्घ्यं कल्पयाम्यहम्॥

आचमनीयम्- देव देव नमस्तुभ्यं पुराणपुरुषोत्तम।
मयानीतमिदं तोयं गृहीत्वाचमनं कुरु॥

स्नानम्- ॐ गंगा च यमुना गोदावरी चैव सरस्वती।
तापी पयोष्णी रेवा च ताभ्यः स्नानार्थमाहृतम्॥

पञ्चामृतस्नानम्- पयोदधि धृतं चैव मधु शर्करयाऽन्वितम्।
पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम्॥

शुद्धोदकस्नानम्- ॐ नदीनां चैव सरसं भयनीतं जलं शुभम्।
अनेन त्वं कुरु स्नानं मन्त्रैर्वारुणकैः शुभैः॥

पुनराचमनीयम्- ॐ कपूखासितं तोयं मन्द्राकिन्याः समाहृतम्।
आचम्यतां महाभाग मया दत्तं हि भक्तितः॥

वस्त्रम्- तन्तु सन्तानसंयुक्तं कलाकौशल कल्पतम्।
पीवस्त्रयुगं देव कृपया प्रतिगृह्यताम्॥

यज्ञोपवीतम्- ॐ यस्य शक्तित्रयेणेदं सम्प्रोतं सचराचरम्।

यज्ञरुपाय तस्मै ते यज्ञसूत्रं प्रकल्पते॥

चन्दनम्- ॐ श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्।
विलोपनं सुरश्रेष्ठ प्रीतत्यर्थं प्रतिगृह्यताम्॥

अक्षताः - अक्षताश्च सुरश्रेष्ठ कुंकुमात्माः सुशोभना।
मया निवेदिता भकत्या तान् गृहाण परमेश्वर॥

पुष्पाणि- ॐ सुगन्धीनि सुपुष्पाणि देशकालोद् भवानि च।
प्रयच्छामि च देवेश गृहाण सुरसत्तम्॥

विष्णुश्चेत् तुलसोदलं- ॐ तुलसों हेमरुपाञ्च रत्नरुपां च मञ्जरीम्।
भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम्॥

शिवश्चेत् बिल्वपत्रम्- ॐ त्रिदलं त्रिगुणकारं त्रिनेत्रञ्च त्रिधायुतम्।
त्रिजन्म पाप संहार बिल्वपत्रं शिर्वापणम्॥

धूप- वनस्पतिरसो दिव्यो गन्धाढ्यं सुमनोहरम्।
आध्रेयः सर्व देवानां धूपोऽयं प्रतिगृह्यताम्॥

दीपः - ॐ साज्यं सद्बर्तिसंयुक्तं वह्निना योजितं मया।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापह॥

नैवेद्यम्- ॐ अन्नं चर्तुविधं स्वादु रसैः षड्भिः समन्वितम्।
मया निवेदितं देव नैवेद्यं प्रतिगृह्यताम्॥

फलानि- ॐ फलान्यमृत कल्पानि स्थापितानि पुरस्तव।
तेन मे सफलावार्प्ति भवेज्जन्मनि जन्मनि॥

दक्षिणाद्रव्यम्- ॐ हिरण्यगर्भः गर्भस्थ हेमबीजं विभावसोः।
अनन्तपुण्यफलदमतः शन्तिं प्रयच्छ मे॥

ताम्बूलानि- ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्।

एलादि चूर्ण संयुक्तं ताम्बूलं प्रतिगृह्यताम्॥

प्रदक्षिणा- ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च।
तानि तानि प्रणश्यन्तु प्रदक्षिण पदे-पदे॥

पुष्पाञ्जलि- नानासुगन्धपुष्पाणि यथाकालोद् भवानि च।
पुष्पाञ्जर्लिमया दत्तो गृहाण परमेश्वर॥

सति सम्भवे षोडशोपचारेण विष्णु पूजनं नान्दीमुखश्राद्धञ्च कुर्यात् तद्भावे सुवर्ण दानं कुर्यात्

सुवर्णदानसंकल्प- ॐ अद्येत्यादि अमुक गोत्रस्यात्मजस्यामुक शर्मणः मूला (ज्येष्ठा, मघा, रेवती वा) नक्षत्रअधिकरणजन्य जन्मांगभूत कर्तव्याभ्युदयिक श्राद्ध जन्य फलसम्प्राप्त्यर्थममुं यथाशक्ति सुवर्णमग्निदैवतं यथानामगोत्रायमुक शर्मणे ब्रह्मणाय तुभ्यं अहं सम्प्रददे।

## अथ गोमुख प्रसव विधि

## गण्डान्त शान्ति (मूल शान्ति)

गणेशादिपुजनान्तरं आचार्य मण्डपाद् वहिः यजमानस्य गोमयोपलिप्तगृहे ईशान भागे गौर सर्षपाणि विकिरेत्।

ॐ आपोहिष्ठा मयोमुवस्तान ऊर्जे दधातन। महेरणाय चक्षसे। यो वः शिवतमोरसस्तस्य भाजयतेहनः॥ उशतीरिव मातरः॥ तस्माऽ अरङ्गमामवो यस्य क्षयाय जिन्वथ। आपो जनयथाचनः॥ इति मन्त्रेण पञ्चगव्य प्रोक्षणं कृत्वा तत्र अष्टदल पद्मं विरच्य तस्योपरि रक्तवस्त्रं प्रसार्य नवं वंश शूर्पं निधाय शूर्पे तिलान् विकीर्य तस्योपरि पुनः रक्तवस्त्रं प्रसार्य तस्योपरि प्राङ्मुखं पश्चिमपादं शिशुं निधाय मांगलिक सूत्रेण त्रिगुणितेन सशूर्पं शिशुं वेष्टयेत्। ततः शिशुसमीपे

एलादि चूर्ण संयुक्तं ताम्बूलं प्रतिगृह्यताम्॥

प्रदक्षिणा- ॐ यानि कानि च पापानि ब्रह्महत्यासमानि च।
तानि तानि प्रणश्यन्तु प्रदक्षिण पदे-पदे॥

पुष्पाञ्जलि- नानासुगन्धपुष्पाणि यथाकालोद् भवानि च।
पुष्पाञ्जलिर्मया दत्तो गृहाण परमेश्वर॥

सति सम्भवे षोडशोपचारेण विष्णु पूजनं नान्दीमुखश्राद्धञ्च कुर्यात्
तद्भावे सुवर्ण दानं कुर्यात्

सुवर्णदानसंकल्प- ॐ अद्येत्यादि अमुक गोत्रस्यात्मजस्यामुक शर्मणः मूला (ज्येष्ठा, मघा, रेवती वा) नक्षत्रअधिकरणजन्य जन्मांगभूत कर्तव्याभ्युदयिक श्राद्ध जन्य फलसम्प्राप्त्यर्थममुं यथाशक्ति सुवर्णमग्निदैवतं यथानामगोत्रायमुक शर्मणे ब्रह्मणाय तुभ्यं अहं सम्प्रददे।

## अथ गोमुख प्रसव विधि

## गण्डान्त शान्ति (मूल शान्ति)

गणेशादिपुजनान्तरं आचार्य मण्डपाद् वहिः यजमानस्य गोमयोपलिप्तगृहे ईशान भागे गौर सर्षपाणि विकिरेत्।

ॐ आपोहिष्ठा मयोमुवस्तान ऊर्जे दधातन। महेरणाय चक्षसे। यो वः शिवतमोरसस्तस्य भाजयतेहनः॥ उशतीरिव मातरः॥ तस्माऽ अरङ्गमामवो यस्य क्षयाय जिन्वथ। आपो जनयथाचनः॥ इति मन्त्रेण पञ्चगव्य प्रोक्षणं कृत्वा तत्र अष्टदल पद्मं विरच्य तस्योपरि रक्तवस्त्रं प्रसार्य नवं वंश शूर्पं निधाय शूर्पे तिलान् विकीर्य तस्योपरि पुनः रक्तवस्त्रं प्रसार्य तस्योपरि प्राङ्मुखं पश्चिमपादं शिशुं निधाय मांगलिक सूत्रेण त्रिगुणितेन सशूर्पं शिशुं वेष्टयेत्। ततः शिशुसमीपे

गोमुखमानीय संश्लेषं स्पर्शं वा कृत्वा गोमुख प्रसवं भावयित्वा दर्भं गृहीत्वा पञ्चगव्येन तं शिशुं मार्जयेत्।

तत्र मन्त्रः - ॐ विष्णुयोनि कल्पयतु त्वष्टा रूपाणि पिंशतु। आषिञ्चतु प्रजापतिर्धाता गर्भं दधातु मे। गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश। यस्मात् तस्मात् शिवं मे स्यादिहजोके परत्र च॥

ततः अग्रलिखित मन्त्रेण आचार्यः शिशुमादाय मातृहस्ते दद्यात्॥

तत्र मन्त्राः - ॐ विष्णो श्रेष्ठेन रूपेणास्यां नार्यां गवीन्यां पुमांसं पुत्रमाधेहि दशमे मासि सूतवे।

तदनन्तरं माता शिशुं गोमुखप्रदेशात् शिशुमानीय गोपुच्छदेशे वालं निरीक्ष्य पिता ( स्वभर्तृहस्तयो ) दद्यात्।

पिता पठनीयो मन्त्रः -

ॐ अङ्गदङ्गात् सम्भवसि हृदयादधिजायते।

आत्मा वै पुत्रनामासि संजीव शरदः शतम्॥

इतिमन्त्रेण शिशुं त्रिरवध्राय मातृ हस्तयोः दद्यात्॥

ततः आचार्यः आपोहिष्ठेत्यादि मन्त्रेण शिशुं पञ्चगव्येनअभिषिंचेत्। सम्भवे चेत् तर्हि अत्रैव पुण्यवाचनमपि कुर्यात्। सूर्यादिनवग्रहाणां प्रसन्नार्थं गो, वस्त्र, प्रचूरधान्यादिकं, सुवर्णं दद्यात्। ततः आचार्याय गो, गोनिष्क्रयोद्रव्यं वा दापयेत्।

संकल्प- ॐ गोमुखप्रसवाख्यकर्मणः सांगतसिद्ध्यर्थं सूर्यादिनवग्रहाणां प्रीत्यर्थं च इमानि, गो, वस्त्र, धान्यादि सुवर्णानि सदक्षिणानि तन्निष्क्रयीभूतानि द्रव्याणि वा यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे॥

गोमुखप्रवसवान्तरं प्रागेव स्थापित प्रधान कलशे पूर्णपात्रोपरि अष्टदलकमलं विरच्य तस्योपरि निर्ऋतिसहित नक्षत्र देवतानां सम्पूजयेत्। आदौ स्वर्णमयी निर्ऋति प्रतिमायां अग्न्युत्तारणपूर्वक

प्राणप्रतिष्ठां विधाय षोडशोपचारेण लब्धोपचारेण व सम्पूजयेत्।

## नक्षत्र देवतानां नाममन्त्राः

( १ ) ॐ अश्विनीकुमाराभ्यां नमः ( २ ) ॐ यमाय नमः ( ३ ) ॐ अग्नये नमः ( ४ ) ॐ ब्रह्मणे नमः ( ५ ) ॐ चन्द्रमसे नमः ( ६ ) ॐ रुद्राय नमः ( ७ ) ॐ आदित्याय नमः ( ८ ) ॐ गुरवे नमः ( ९ ) ॐ सर्पेभ्यो नमः ( १० ) ॐ पितृभ्यो नमः ( ११ ) ॐ भगाय नमः ( १२ ) ॐ अर्यमणे नमः ( १३ ) ॐ सावित्रे नमः ( १४ ) ॐ विश्कर्मणे नमः ( १५ ) ॐ वायवे नमः ( १६ ) ॐ इन्द्राग्नीभ्या नमः ( १७ ) ॐ मित्राय नमः ( १८ ) ॐ इन्द्राय नमः ( १९ ) ॐ निर्ऋतये नमः ( २० ) ॐ अद्भ्यो नमः ( २१ ) ॐ विश्वेभ्यो देवेभ्यो नमः ( २२ ) ॐ विष्णवे नमः ( २३ ) ॐ वसुभ्यो नमः ( २४ ) ॐ वरुणाय नमः ( २५ ) ॐ अजैकपदे नमः ( २६ ) ॐ अर्हिबुध्न्याय नमः ( २७ ) ॐ पूष्णे नमः इति नाम मन्त्रेण वैदिक मन्त्रेण वा नक्षत्र देवतानां पूजयेत्।

ततः वरुणकलशसमीपे गोधूपंचूर्णादिना अष्टदलपद्मं विरच्य तस्योपरि सप्तधान्यराशिं कृत्वा शतच्छिद्रं कलशं स्थाप्य तस्य पूर्वादिक्रमेण चतुदिक्षुषु चतुष्कुम्भान् पूर्ववत् कलशस्थापन विधिना कलशं स्थापयेत्।

पूर्वदिशि कलशं स्थाप्य तस्मिन् कलशे- रक्तचन्दनं, कुष्ट, कमल, शूंठी, मुस्ता, आमलक, वच, श्वेतसर्षप मुरामांसी यथालब्धवस्तूनि प्रक्षिपेत्। तत्र 'नमस्ते रुद्र मन्यव' इत्यादि षोडशान् मन्त्रान् जपित्वा कलशस्य स्पर्शं कुर्यात्। पुष्पाणि क्षिपेत्। 'नमस्ते रुद्र मन्यव' इति सर्वे मन्त्रान् परिशिष्ट भागे द्रष्टव्यः॥

दक्षिणदिशि- पूर्वोक्त विधिनां कलशं संस्थाप्य कलशे- पञ्चामृत, गजमद, तीर्थोदक, सप्तधान्य, सवर्णादि क्षिपेत्। तत्र- ॐ

आशुः शिशान इति द्वादश मन्त्रान् पठित्वा कलश स्पर्शं कृत्वा पुष्पाणि क्षिपेत्। मन्त्रान् परिशिष्टभागे द्रष्टव्यः ॥

पश्चिमदिशि- पूंजनप्रकरणोक्त विधिना कलशं स्थाप्य अस्मिन् कलशे सप्तमृतिकामेव क्षिपेत्। तत्र- ॐ कृणुष्वान इति पञ्चमन्त्रान् पठित्वा पुष्पाणि दद्यात्। सर्वे मन्त्रान् परिशिष्ट भागे द्रष्टव्यः ॥

उत्तरदिशि- पूर्ववत् कलशं स्थाप्य तस्मिन् कलशे- पञ्चरत्न, वट, अश्वत्थ, पलाश, उदुम्बर, जम्बू, प्लक्ष, आम्रपल्लवान् सप्तकूपजलानि च क्षिपेत्। कलशं स्पर्शं कृत्वा 'रक्षोहरणं' चतुर्मन्त्रान् जपित्वा पुष्पाणि क्षिपेत्। सर्वे मन्त्रान् परिशिष्ट भागे द्रष्टव्यः ॥

मध्येस्थापित शतच्छिद्रकलशे सति सम्भवे शतौषधयः सर्वोषधी वा, तदभावे सद्वृक्षाणां पल्लवान् क्षिपेत्। विष्णुक्रान्ता, शताबरी, सहदेवी, कुश, कुंकमानि क्षिपेद्॥ अत्र 'ॐ त्र्यबम्वकमि'ति अष्टोत्तरशतं जपेत्। जपान्तेकलशस्य स्पर्शं कृत्वा गन्धपुष्पाणि च क्षिपेत्।

पूजनान्ते अग्निस्थापनप्रदेशात् पश्चिमदिशि उर्ध्वं शिक्यं बद्धवा तत्रैव वंशपात्रे कम्बलं प्रसार्य तस्योपरिशतच्छिद्रं कलशं निधाय तस्याधः सुकाष्ठपीठं निधाय श्वेतवस्त्रेणाच्छद्य तत्र यजमानं शिशुसहितां पत्नीं चोपवेशयेत्।

तत्पश्चात् शिक्यस्थे कलशे शनैः शनैः चतुष्कुम्भस्थलं जलं प्रक्षिप्य आचार्यः अधोलिखित अभिषेक मन्त्रेण सपत्नीकयजमानबालक-स्योपरि अभिषेकं कुर्यात्।

ॐ योऽसौ वज्रधरो देवो महेन्द्रो गजवाहनः।
मूलाजातस्य शिशोर्दोषं मातापित्रो व्यपोहतु॥ १ ॥
ॐ योऽसौ शक्तिधरो देवो हुतभूङ् मेषवाहनः।
सप्तजिह्वश्च देवोऽग्निर्मूला दोषं व्यपोहतु॥ २ ॥

ॐ योऽसौ दण्डधरो देवो धर्मो महिषवाहन।
मूला जातशिशोर्दोषं व्यपोहतु यमो मम॥ ३॥
ॐ योऽसौ खड्गधरो देवो निर्ऋर्ति राक्षसाधिपः।
प्रशामयतु मूलोत्थं दोषं गण्डान्तसम्भवम्॥ ४॥
ॐ योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः।
नक्रवाहः प्रचेता वै मूला दोषं व्यपोहतु॥ ५॥
ॐ योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः।
प्रशामयतु मूलोत्थं दोषं बालस्य शान्तिदः॥ ६॥
ॐ योऽसौ निधिपतिर्देवः खड्गमृद वाजिवाहनः।
मातापित्रोः शिशोश्चैव मूला दोषं व्यपोहतु॥ ७॥
ॐ योऽसौ पशुपर्तिदेवः पिनाकी वृषवाहनः।
मूलागण्डान्त दोषान्ममाशु व्यपोहतु॥ ८॥
ॐ विघ्नेशः क्षेत्रपो दूर्गा लोकपालां नवग्रहाः।
सर्वदोषप्रशमनं सर्वे कुर्वन्तु शान्तिदाः॥ ९॥
ॐ मूलर्क्षे जातबालस्य मातृपित्रोर्धनस्य च।
भ्रातृज्ञातिकुलस्थानां दोषं सर्व व्योपहतु॥ १०॥
ॐ पितरः सर्वभूतानां रक्षन्तु पितरः सदा।
मूला नक्षत्रजातस्य बितं च ज्ञातिबान्धवान्॥ ११॥

तत्पश्चात् यजमानः सपुत्रकलत्रः शुद्धोदकेन स्नात्वा नूतन वस्त्राणि परिधाय आर्द्रवांसासि नापिताय दद्यात्। ततो हवनप्रकरणोक्त विधिना कुशकण्डिकां कृत्वा होमं कुर्यात्।

## कुशकण्डिकाम्

होमार्थ चतुरंगुलोच्छ्रित भूमिं हस्तमात्र परिमितां भूमिं परिमित्य

कुशैः परिसमूह्य तान् कुशान् ऐशान्यां परित्यज्य गोमयोदकेनोपलिप्य खादिरेण स्रुवेण चोल्लेखनं उल्लेखन क्रमेण अनामिका-अंगुष्ठाभ्यां उद्धृत्य तं मृदम् ऐशान्यं क्षिपेत्। जलेनाभ्युक्ष्य कांस्य पात्रे वह्निमदाय स्वाभिमुखं आत्ममुखं वा अग्नि स्थापयेत्।

तत्राग्निस्थापन मन्त्रः - ॐ अग्निदूतं पुरोदधे हव्यवाहमुपब्रुबे।

देवां २ आसादयादिह॥ इत्यनेनाग्निं स्थापयेत्।

अग्निावाहनमन्त्रः - ॐ त्वं मुखं सर्व देवानां सप्ताचिंरभिविद्यते।

आगच्छ भगवन्नग्ने यज्ञेऽस्मिन् सन्निधौभ व इत्यावाह्य ॐ अग्नेय वैश्वानाराय नमः इत्यानेन सम्पूज्य पुष्पादि क्षिपेत्॥

पुष्पचन्दनताम्बूल वासान्यादाय - ॐ अद्य कर्तव्यामुक शान्ति होम कर्मणि कृताकृतवेक्षणरूप ब्रह्मकर्म कर्तुममुक गोत्रं अमुक शर्माणमेभिः पुष्पचन्दन ताम्बूल वासोर्मि ब्रह्मत्वेन त्वामहं वृणे॥ इति ब्रह्माणं वृणुयात्। ॐ वृत्तोऽस्मि इति प्रतिवचनम्॥

यजमान- ॐ यथाविहित कर्म कुरु। इति

आचार्य- ॐ यथाज्ञानं करवाणि। इति प्रतिवचनम्॥

ततोऽग्नेदक्षिर्णतः शुद्धमासनं दत्वा तदुपरि प्राग्रान् कुशानादाय आस्तीर्य अग्निं प्रदक्षिणं कारयित्वा। ॐ अस्मिन् कर्मणि त्वं मे ब्रह्मा भव इति यजमानेलोक्ते ॐ भवानि इति तेनोक्ते तदुपरि ब्रह्माणमुदङ्-मुखमुपवेश्य प्रणीतापात्रं पुरः कृत्वा वारिणा परिपूर्य कुशैः आच्छाद्य ब्रह्मणो मुखमवलोक्य अग्ने उत्तरतः कुशोपरि निदध्यात्। ततः परिस्तरणम्। बर्हिषः चतुर्थभागमादायग्नेयीशानान्तं, ब्रह्मणोऽग्नि पर्यन्तं, नैर्ऋत्याद्वायत्यान्तमग्नितः प्रणीता पर्यन्तं। ततोऽग्नेः - उतरतः पश्चिमदिशि पवित्रद्देदनार्थ कुशत्रयं, पवित्रंकरणार्थं साग्रमनन्तर्गमित कुशपत्रद्वयं प्रक्षोणी पात्रमाज्यस्थाली सम्मार्जनार्थं वेणीरूपं कुशत्रयं

समिधः तिस्त्रः स्त्रुवः आज्यं षट्पञ्चाशतदुत्तरार्चयमुष्टिशतद्व्यावच्छिन्नं आमतण्डुलं पूरित पूर्णपात्रम्।

ततः पवित्रच्छेदकुशैः पवित्रेच्छित्वा सपवित्रेण करेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिका अंगुष्ठाभ्यां पवित्रे उत्तराग्रे गृहीत्वा त्रिरुत्पवनम्।। प्रोक्षणीपात्रं वामकरेण आदाय अनामिका अंगुष्ठाभ्यां गृहीतपवित्राभ्यां तत् जलं किंचित् त्रिः उत्क्षिप्य प्रणीतोकेन प्रोक्षणीमभिषिच्य, प्रोक्षणी जलेनसादित वस्तुसेचनं कृत्वा अग्नि प्रणीतयोर्मध्ये प्रोक्षणीपात्रं निदध्यात्। आज्यस्थाल्यामाज्यं निरुप्याधिश्रयणम्। ततः कुशं प्रज्वाल्याज्योपरि भ्रामयित्वा वह्नौ क्षिपेद्।। ततः स्त्रुवं त्रिः प्रतप्य, कुशै संमार्जन कुशानामग्रैरन्तरतो मूलै बाह्यतः स्त्रुवं सम्मृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः त्रिप्रतप्य दक्षिणतो निदध्यात्। आज्यस्याग्नेरचतारणम् ततः आज्यंप्रोक्षणीवत् उत्पूयावेक्ष्य सव्यद्रव्ये तन्निरसनं कृत्वा पुनः प्रोक्षणीवत् उत्पूय। ततो उत्यायोपमन कुशान् वाम हस्ते कृत्वा प्रजापति मनसा ध्यात्वा तूष्णीमग्नौ धृताक्ताः समिधः तिस्त्रः क्षिपेद्।

उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेण - अग्निं प्रणीतापात्रे पवित्रे - निधाय पातित दक्षिणजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमे अग्नौ स्त्रुवेणाज्याहुतीर्जुहोति।। आहुत्यनन्तरं स्त्रुवावस्थित धृतशेषस्य प्रोक्षणी पात्रे प्रक्षेपः ।।

अथ स्त्रुव पूजनम्- ॐ आवाह्याम्यहं देवं स्त्रुवं शेवधिमुत्तमम्।
स्वाहाकार स्वाधाकार वषट्कार समन्वितम्।।

## हवन

ॐ प्रजापते स्वाहा, इदं प्रजापतये न मम। ॐ इन्द्राय स्वाहा, इदं इन्द्राय न मम। ॐ अग्नये स्वाहा, इदं अग्नये न मम। ॐ सोमाय स्वाहा, इदं सोमाय न मम। ॐ भूः स्वाहा, इदं अग्नेय न मम। ॐ स्वः

स्वाहा, इदं वायवे न मम। ॐ स्वः स्वाहा, इदं सूर्याय न मम॥

ॐ त्वन्नोऽग्ने वरुणस्य विद्वान् देवस्यहेडो अवयासिसीष्ठः। यजिष्ठो बह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् स्वाहा। इदं अग्निवरुणाभ्यां न मम।

ॐ सत्वन्नोऽग्ने वमो भवोती नेदिष्ठो अस्या उषसो व्युष्ठौ। अयक्ष्व नो वरुणꣳरराणो ब्रीहिमृडीकꣳसुहवो न एधि स्वाहा। इदं अग्निवरुणाभ्यां न मम।

ॐ अयाश्चाग्नेस्य नभिशस्तिपाश्य सव्यमित्व मया असि। अयानो यज्ञं वहास्य यानो धेहि भेषजꣳ स्वाहा। इदं अग्नेय न मम।

ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितत महान्तस्तेभिर्नोऽद्य सवितोत विष्णुविश्वे मरुतः स्वर्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम।

ॐ उदुत्तमं वरुण पाशमस्मदबाधयं विमध्यꣳ श्रथाय अथावयमादित्य व्रते तवानागसोऽदितयेस्स्याम स्वाहा। इदं वरुणाय न मम॥ एताः सर्वे प्रायश्चित संज्ञाकाः।

तत्पश्चात्- नवग्रह, दशादिक्पालादिनां हवनं विधाय प्रधान नक्षत्रदेवतां अष्टोत्तरशतं जुहुयात्। ततो नक्षत्र देवस्य अधिदेवता प्रत्यधिदेवता मन्त्रेणापि हुत्वा सप्तविंशति नक्षत्राधिपति देवतानां नामन्त्रेण जुहुयात् ततः स्विष्टकृत् होमं कुर्यात्। तदनन्तरं दिक्पालादिनां सर्व बलिदानादि विधाय।

ततः संस्रवप्राशनम्। आचमनं कुर्यात्। ततः ब्रह्मणे दक्षिणां दद्यात्। ॐ अद्य कृतैत् मूलशान्ति होमकर्मणि कृताकृताऽवेक्षण रूप ब्रह्म कर्मप्रतिष्ठार्थमिदं पूर्णपात्र प्रजापति दैवतं यथानाम गोत्राय ब्रह्मणाय तुभ्यमहं सम्प्रददे।

ॐ स्वस्तिति प्रतिवचनम्। ततो ब्रह्मग्रन्थि विमोकः। ॐ

सुमित्रियान आपः ओषधय सन्तु इत्यनेन पवित्रेण प्रणीता जलेन शिरः सम्मृज्यः, पुनः ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति मन्त्रेण प्रणीता ऐशान्यं न्यूब्जीकरणम्॥

तदनन्तरं आस्तरण क्रमेण बर्हिरुत्थायाज्येनाभिधार्य हस्तेनैव जुहुयात् अनेन मन्त्रेण- ॐ देवागातु विदोगातु वित्वागातुमितमनसस्पत इमं देव यज्ञꣳ स्वाहा वातेधा स्वाहा॥

ततः उत्थाय धृत पुष्प फलेन पूर्णाहूर्तिदद्यात्- ॐ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत अजातमग्निं कविꣳ संम्राजमतिथि जनानामासन्ना पात्रं जनयन्तु देवाः स्वाहा॥

ततः स्त्रुवेण धृतधारा वसोर्धारां वा दद्यात्- ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्त्रधारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वाकामधुक्षः स्वाहा॥

अग्निप्रार्थना- ॐ श्रद्धां मेधां यशः विद्यां पुष्टिं श्रियं बलम्।

तेजः आयुष्यमारोग्यं देहि मे हव्यवाहन॥

ततः उपविश्य स्त्रुवेण भस्ममानीय दक्षिण अनामिकया गृहीत भस्मना॥ ॐ त्र्यायुषं जमदग्ने इति ललाटे, ॐ कश्यपस्य त्र्यायुषं इति ग्रीवायाम्, ॐ यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले, ॐ तन्नोऽस्तु त्र्यायुषमिति हृदये। यजामन पक्षे तन्नो इत्यस्थाने तत्ते इति विशेषः॥

छायापात्रदान- ॐ अद्य कृतैत् मूलशान्ति होम कर्मणि कृताकृतावेक्षणरूपं इदं छायापात्रं यथानाम गोत्राय ब्रह्मणाय दातुमहमहन्दे ( सम्प्रददे )।

दक्षिणा संकल्प- ॐ अद्य कृतैत मूलशान्ति होम कर्मणि इमां दक्षिणा यथानामगोत्राय ब्रह्मणाय तुभ्यमहं सम्प्रददे॥

पूर्वस्थापित वरुणकलशजलेन शिशुंसहित यजमानमभिषिंचेत्

ततः आचार्यदिनो दक्षिणं ब्रह्मणभोजनादिकं कुर्यात्॥

## ॥ अभिषेक मन्त्राः ॥

ॐ सुरारस्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः॥ १॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते।
आखण्डलोऽग्निर्भगवान् यमो वै नैर्ऋति स्तथा॥ २॥
वरुणः पवनश्चैव धनाध्यक्षः शिवस्तथा।
ब्रह्मणा सहिताः शेषो दिक्पालाः पान्तु ते सदा॥ ३॥
कीर्तिलक्ष्मीधृर्तिमेधा पुष्टिः श्रद्धा क्रिया रति।
बुद्धिर्जाति वपुः ऋद्धिः तुष्टिदृष्टिश्च मातरः॥ ४॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्या समागताः।
आदित्यः चन्द्रभौमाश्च बुधजीव सितार्कजाः॥ ५॥
ग्रहास्त्वामभिषिञ्चतु राहुकेतुः तथैव च।
देवदानवगन्धर्वाः यक्षराक्षस पन्नगाः॥ ६॥
ऋषयो मुनयो गावो देवमातर एव च।
देवपत्न्यो द्रुमा नागाः देव्याश्चाप्सरसां गणाः॥ ७॥
अस्त्राणि चैव शस्त्राणि शतशो वाहनानि च।
औषधानि च रत्नानि कालस्यावयवाश्च ये॥ ८॥
सरितः सागराः शैलस्तीर्थानि जलदास्तथा।
एते त्वामभिषिञ्चन्तु धर्मकामार्थ सिद्धये॥ ८॥

ततः आवाहितदेवतानां विसर्जननेन-

ॐ गच्छत्वं भगवन्नग्ने स्वस्थाने कुण्डमध्यतः।
हुतमदाय देवेभ्यो शीघ्रं देहि प्रसीद मे॥ १॥
गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर।

यत्र ब्रह्मादयो देवाः तत्र गच्छ हुताशन॥ २॥

॥ इति॥

आश्लेषादि सर्व गण्डान्त नक्षत्रशान्ति पूर्ववत् कार्यम्। पूजनादि, हवनाभिषेकादौ पूर्वोक्त प्रकरेण कर्तव्यम् परञ्च किंञ्चित् परिर्वनीय शब्दाः (पदमूहनीयम्)।

मूलशान्तौ- अभिषेके- मूलदोषं, मूलोत्थं, मूलनक्षत्रजातस्य, इति।

ज्येष्ठायां- अभिषेके- ज्येष्ठदोषं, ज्येष्ठत्थं, ज्येष्ठनक्षत्र-जातस्य, इति।

आश्लेषायां- अभिषेके- सर्पदोषं, सार्पोत्थं, सार्पनक्षत्रजातस्य, इति।

एवं प्रकारेण पृथक्-पृथक् नक्षत्राणामपि ज्ञेयम्॥ शेष पूर्ववत्।

## ॥ अथ कार्तिकस्त्रीप्रसूता शान्तिः॥

पुण्यदिवसे शुभमुहूर्त्ते सुस्नातः ससुतो सपत्नीको प्राङ्मुख उपविश्य आचम्य आसनशुद्धि, दिक्शुद्धिञ्च विधाय स्वस्तिवाचनं कुर्यात्। ततः प्रतिज्ञा संकल्प- ॐ अद्येत्यादि उक्तत्वा ज्ञतज्ञतकामिक वाचिक मानसिक पापक्षयपूर्वक श्रुतिस्मृति पुराणोक्तफल प्राप्तिकामः सौरकार्तिकमासा करणकैतत् स्वीयस्त्री प्रसव संसूचिततैत् कुमारैतत्पिता तत् पित्रादि जनाधिकरणकायुः सुखसम्पत् रक्षादि सिद्ध्यर्थं श्री ब्रह्मादि पूजनं पूर्वक कार्तिक स्त्रीप्रसूता शान्तिमहंकरिष्ये॥ तत्रादौ गणेशाम्बिकयोः पूजन कर्माहं करष्यि॥

सर्वं नवग्रहादिनां पूर्ववत् सम्पूजयेत्॥

ततः पूर्वस्यां दिशिधान्योपरि सविधि कलशं संस्थाप्य तस्योपरि

ब्रह्मणः पूजयेत्।

आवाहन मन्त्रः - ॐ युक्तेन मनसा वयं देवस्य सवितुः सवे। स्वर्ग्याय शकत्य॥ इति मन्त्रेण आवाह्य गन्धादिभिः सम्पूजयते्। ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद् विसीमतः सुरुचो वेन आवः। सबुध्न्या उपमा अस्य बिष्ठाः सतश्च योनिमसतश्च बिवः। इत्यनेन पुष्पांजलिं दद्यात्। ततः वरणसंमृतमादाय- ॐ अद्येत्यादि पूर्वप्रतिज्ञज्ञतार्थ सिद्धयर्थं क्रियमाध कार्तिकस्वस्त्री प्रसूताशान्ति अङ्गत्वेन ब्रह्मजज्ञानमिति मन्त्रेण यथापरिमितं जपं जपकरणार्थं एर्भिवरणद्रव्यैः अमुक गौत्रममुकशर्माणं ब्रह्मणं जापकत्वेन त्वां वृणे। इति

ततः दक्षिणस्यासंदिशि- पूर्वोक्त कलशस्थापित विधिना गोधूप अन्नोपरि कलशं संस्थाप्य तत्र श्री विष्णुं पूजयेत्।

आवाहन मन्त्राः - ॐ विष्णोरराटमसि विष्णोश्नप्त्रेस्थो विष्णोः स्यूरसि। विष्णोध्रुवोसि वैष्णवमसि विष्णवे त्वा॥

इति मन्त्रेण आवाह्य षोडशोपचारेण पंचोपचारेण वा पूजयेत्।

पुष्पांजलि दद्यादनेन- ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाः सुरे॥ इति

ततः वरणसम्भृतमादायः- ॐ अद्येत्यादि क्रियमाण कार्तिक स्वस्त्रीप्रसूताशान्ति अंगत्वेन। ॐ इदं विष्णुरिति यथा परिमितं जपं कारियतुं एभिद्रव्यैः अमुक गोत्रममुकशर्माणं ब्रह्मणं जापकत्वेन त्वां वृणे। इति।

पश्चिम दिशिः - तण्डुलान्नोपरि पूर्ववत् कलशं संस्थाप्य तत्र पुष्पादिभिः रुद्रं पूजयेत्।

आवाहन मन्त्रः - ॐ नमस्ते रुद्रमन्यव उतोत इषवे नमः। बाहुभ्यामुतते नमः॥ इत्यनेनावाह्य।

गन्धादिर्भि सम्पूज्य प्रार्थयेत्- ॐ इमा रुद्राय तवसे कपर्दिने

क्षयद्वीराय प्रमरामहेमतीः। यथा शमस द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्। इति।

ततः वरणसम्भृतमदाय- ॐ अद्येत्यादि क्रियमाणं कार्तिक स्वस्त्री प्रसूतायशान्ति अंगत्वेन 'ॐ नमस्ते रुद्रमिंति यथापरिमितं जपकारयितु एमिवरुणद्रव्यैः अमुक गोत्रममुकशर्माणं ब्रह्मणं जापकत्वेन त्वां वृणे। इति।

उत्तरस्यांदिशिः - सप्तधान्योपरिसविधि कलशं स्थाप्य तस्योपरि सूर्यमावाह्य लब्धोपचारेण सम्पूजयेत्-

ॐ दिवाकरं सहस्रांशु ब्रह्माद्यैरमरैः स्तुतं।

लोकनाथं जगच्चक्षुः सूर्यमावध्याम्यहम्॥ इत्यावाह्य

गन्धादिभिः सम्पूज्य प्रार्थयेत् अनेन- ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन्॥ इति पुष्पांजलिम्।

तदनन्तरं वरणसम्भृतमदाय- ॐ अद्येत्यादि क्रियमाण कार्तिकस्वस्त्री प्रसूताशान्ति अङ्त्वेन 'ॐ आकृष्णेन ...' इति मन्त्रेण यथापरिमितं जपं कारयितुं एर्भिवरणद्रव्यैः अमुक गोत्रममुक शर्माणं ब्रह्मणं जापकत्वेन त्वामहं वृणे॥ इति

ततः - वरणसम्भृतमदाय- ॐ अद्येत्यादि क्रियमाण कार्तिक स्त्री प्रसूताशान्ति अङ्त्वेन 'ॐ त्र्यम्बकमिंति मन्त्रस्य सपादलक्षं, तद्र्ध्वं चर्तुभांश वा जपं कारियतुं एर्भिडव्यैः अमुक गोत्रान् अमुकामुक शर्मणः ब्रह्मणान् जाप कत्वेन युष्मान् अहं वृणे। इति। सर्वेः विप्राः स्वस्ववरणसम्भृतश्च गृहीत्वा स्वासने उपविश्च शान्तभावेन जपं कुर्युः।

जापनन्तरं विधिवत् अग्निस्थापनं कुशकण्डिकां च कृत्वा 'ॐ प्रजापतये स्वाहा' इत्यरभ्य प्रायश्चित संज्ञक होम, नवग्रहाणां होम,

दशदिक्पालानां होमञ्च कुर्यात्। ब्रह्मा, विष्णु, रुद्र सूर्य मन्त्रेणापिजुहुयात्। 'ॐ त्र्यम्बकमि'ति मन्त्रेण अष्टोत्तरशतं जुहुयात्। ततो अधोलिखित नाममन्त्रेणापि आहुतिं दद्यात्-

(१) ॐ सूर्याय स्वाहा

(२) ॐ ब्रह्मणे स्वाहा

(३) ॐ विष्णवे स्वाहा

(४) ॐ रुद्राय स्वाहा

(५) ॐ शंभव स्वाहा

(६) ॐ ईशाय स्वाहा

(७) ॐ पशुपतये स्वाहा

(८) ॐ शिवाय स्वाहा

(९) ॐ महेश्वराय स्वाहा

(१०) ॐ शूलिने स्वाहा

(११) ॐ ईश्वराय स्वाहा

(१२) ॐ शर्वाय स्वाहा

(१३) ॐ ईशानाय स्वाहा

(१४) ॐ शंकराय स्वाहा

(१५) ॐ चन्द्रशेखराय स्वाहा

(१६) ॐ भूतेशाय स्वाहा

(१७) ॐ खण्डपरशवे स्वाहा

(१८) ॐ गिरीशाय स्वाहा

(१९) ॐ मृडाय स्वाहा

(२०) ॐ मृत्युंजयाय स्वाहा

( २१ ) ॐ कृत्तिवाससे स्वाहा

( २२ ) ॐ पिनाकिने स्वाहा

( २३ ) ॐ प्रमथाधिपाय स्वाहा

( २४ ) ॐ उग्राय स्वाहा

( २५ ) ॐ कपर्दिने स्वाहा

( २६ ) ॐ श्रीकण्ठाय स्वाहा

( २७ ) ॐ शितिकण्ठाय स्वाहा

( २८ ) ॐ कपालभृते स्वाहा

( २९ ) ॐ वामदेवाय स्वाहा

( ३० ) ॐ विरुपाक्षाय स्वाहा

( ३१ ) ॐ त्रिलोचनाय स्वाहा

( ३२ ) ॐ कृशानुरेतसे स्वाहा

( ३३ ) ॐ सर्वज्ञाय स्वाहा

( ३४ ) ॐ धूर्जटये स्वाहा

( ३५ ) ॐ नीललोहिताय त्र्यम्बकाय स्वाहा

( ३६ ) ॐ स्मरहराय स्वाहा

( ३७ ) ॐ भर्गाय स्वाहा

( ३८ ) ॐ त्र्यम्बकाय स्वाहा

( ३९ ) ॐ त्रिपुरान्तकाय स्वाहा

( ४० ) ॐ गंगाधराय स्वाहा।

ततः दिक्पालानां दधिमाषभक्तबलिं समर्पयेत्। पूर्णाहूतिं वसोर्धारादि पूर्ववत् कार्यम्।

ततः सपत्नीको यजमानः बालंस्वांके स्वाप्य तिष्ठेत् आचार्य

पूर्वोक्त अभिषेक मन्त्रेणाभिषिंचेत्। अभिषेकान्तरं प्रार्थयेत् अनेन-

ॐ रक्ष मां पुत्रपौत्रांश्चेत् रक्ष मां पशुबन्धनम्।
रक्ष पत्नीं पतिं चैव पितरं मातरं धनम्॥

ततः छायापात्र दानानन्तरं आवाहितदेवमानामुत्तरपूजां विधाय सूर्यार्घ्यदानं देवता विसर्जनभ्य कुर्यात्। अनन्तरं विष्णु स्मरण कुर्यात्।

ॐ प्रमदात् कुर्वतां कर्म प्रच्यवेताऽध्वरेषु यत्।
स्मरणादेव तद् विष्णोः सम्पूर्ण स्यादिति श्रुतिः॥

॥ इति कार्तिक स्त्रीप्रसूताशान्तिः

## ॥ अथ व्यतीपातशान्ति॥

व्यतीपातशान्ति दिने भद्रासनोपरि उपविश्य आचम्य शान्तिपाठ पठन पूर्वकं देवब्रह्मणञ्च नमस्कृत्य पूर्ववत् गोमुखप्रसवं कुर्यात्। ततः जलमादाय संकल्पं कुर्यात्- ॐ अद्येत्यादि अस्य शिशोः व्यतीपात जनन संसूचित सर्वारिष्ट शान्ति द्वारा श्री परमेश्वर प्रीत्यर्थं व्यतीपात जनन शान्ति कर्माहं करिष्ये॥ तत्रादौ गणेशादि पूजनञ्च करिष्ये। इति संकल्प्यादिग्ररक्षणआदि देवतास्थापनं अग्निस्थापनान्तं सर्वं पूर्ववत् कुर्यात्। ततः पूर्वस्यां पीठोपरि श्वेतवस्त्रं प्रसार्य तदुपरि धान्यराशिं कृत्वा तदुपरि पुनः वस्त्रं प्रसार्य तदुपरि तण्डुलराशिं तदुपरि वस्त्रं पुनः तदुपरि तिलराशिं कृत्वा वस्त्रं प्रसार्य पञ्चवर्णै तण्डुलैः अष्टदलं निर्माय तन्मध्ये कलशस्थापन विधिना कलश स्थाप्य तस्योपरि 'आकृष्णेन' इति मन्त्रेण सूर्यम् आवाह्य सम्पूजयेत्, 'ॐ नमस्ते रुद्र' इति मन्त्रेण रुद्रमावाह्य पूजयेत् पुनः 'ॐ अग्निदूतं' इत्यनेन अग्निमावाह्य सम्पूयेत्। तत्पश्चात् सर्वे विप्राः कलशं स्पृष्ट्वा 'विभ्राट्°' अग्निसूक्तम् रुद्रसूक्तम् तथा च त्र्यम्बकं मंत्रस्य जपेत्। तदनन्तरं ऐशाने ग्रहाणां स्थापनादि होमान्त पूर्णाहूति पर्यन्तञ्च पूर्ववत् कुर्यात्। तत्र विशेषरूपेण सूर्य, रुद्र, अग्नि मन्त्रेण पृथक् पृथक्